पदार्थः—हे परमेश्वर वा ! राजन् ! आप ( नर्माय ) क्रीडा के लिये प्रवृत्त हुई ( पुंश्चलूम् ) व्यभिचारिणी स्त्री को (हसाय) हंसने को प्रवृत्त हुए ( कारिम् ) विक्षिप्त पागल को और ( यादसे ) जल जन्तुओं के मारने को प्रवृत्त हुई ( शाबल्याम् ) कबरे मनुष्य की कन्या को दूर कीजिये (ग्रामण्यम् ) ग्रामाधीश ( गणकम् ) ज्योतिषी और ( अभिक्रोशकम् ) सब ओर से बुलाने वाले जन ( तान् ) इन सब को ( महसे ) सत्कार के अर्थ ( वीणावादम् ) वीणा बजाने ( पाणिघ्नम् ) हाथों से वादित्र बजाने और ( तूणवध्मम् ) तूणवनामक बाजे को बजाने वाले ( तान् ) उन सब को ( नृत्ताय ) नांचने के लिये और ( आनन्दाय ) आनन्द के अर्थ ( तलवम् ) ताली आदि बजाने वाले को उत्पन्न वा प्रसिद्ध कीजिये ॥ २० ॥

भावार्थः—मनुष्यों को चाहिये कि हंसी और व्यभिचारादि दोषों को छोड़ और गाने बजाने नाचने आदि की शिक्षा को प्राप्त होके आनन्दित होवें ॥ २० ॥

अग्नय इत्यस्य नारायण ऋषिः । राजेश्वरौ देवते ।

भुरिगत्यष्टिश्छन्दः । गान्धारः स्वरः ॥

पुनस्तमेव विषयमाह ॥

फिर उसी वि० ॥

अ॒ग्नये॒ पीवा॑नं पृथि॒व्यै पी॑ठस॒र्पिणं॑ वा॒यवे॑ चाण्डा॒लम॒न्तरि॑क्षाय वꣳश॒न॒र्त्तिनं॑ दि॒वे ख॑ल॒तिꣳ सूर्य्या॑य ह॒र्य्य॒क्षं नक्ष॑त्रेभ्यः कि॒र्मि॒रं च॒न्द्रम॑से कि॒ला॒सम॒ह्ने शु॒क्लं पि॑ङ्गा॒क्षꣳ रात्र्यै॑ कृ॒ष्णं पि॑ङ्गा॒क्षम् ॥ २१ ॥

अ॒ग्नये॑ । पीवा॑नम् । पृ॒थि॒व्यै । पी॒ठ॒स॒र्पिण॒मिति॑ पीठऽस॒र्पिण॑म् । वा॒यवे॑ । चा॒ण्डा॒लम् । अ॒न्तरि॑क्षाय । व॒ꣳश॒न॒र्त्तिन॒मिति॑ वꣳशऽन॒र्त्तिन॑म् । दि॒वे । ख॒-

लतिम् । सूर्य्याय । हर्य्यक्षमिति हरिऽअक्षम् । नक्षत्रेभ्यः । किर्मिरम् । चन्द्रमसे । किलासम् । अन्हे । शुक्लम् । पिङ्गाक्षमिति पिङ्गऽअक्षम् । रात्र्यै । कृष्णम् । पिङ्गाक्षमिति पिङ्गऽअक्षम् ॥ २१ ॥

पदार्थः—( अग्नये ) पावकाय ( पीवानम् ) स्थूलम् ( पृथिव्यै ) ( पीठसर्पिणम् ) पीठेन सर्पितुं शीलं यस्य तम् ( वायवे ) वायुस्पर्शाय ( चाण्डालम् ) ( अन्तरिक्षाय ) सूर्य्यपृथिव्योर्मध्यस्थायाऽऽकाशाय ( वंशनर्त्तिनम् ) वंशे नर्त्तितुं शीलं यस्य तम् ( दिवे ) क्रीडायै प्रवृत्तम् ( खलतिम् ) निर्बालशिरस्कम् ( सूर्य्याय ) ( हर्य्यक्षम् ) हरीणां वानराणामक्षिणीइवाक्षिणी यस्य तम् ( नक्षत्रेभ्यः ) क्षत्राणां विरोधाय प्रवृत्तेभ्यः ( किर्मिरम् ) कर्बुरवर्णम् ( चंद्रमसे ) ( किलासम् ) ईषच्छ्वेतवर्णम् ( अन्हे ) ( शुक्लम् ) शुक्लम् ( पिङ्गाक्षम् ) पिङ्गे पीतवर्णेऽक्षिणी यस्य तम् ( रात्र्यै ) ( कृष्णम् ) कृष्णवर्णम् ( पिङ्गाक्षम् ) पीताक्षम् ॥ २१ ॥

अन्वयः—हे परमेश्वर ! राजन् ! वा त्वमग्नये पीवानं पृथिव्यै पीठसर्पिणमन्तरिक्षाय वंशनर्त्तिनं सूर्य्याय हर्य्यक्षं चन्द्रमसे किलासमन्हे शुक्लं पिङ्गाक्षमासुव । वायवे चाण्डालं दिवे खलतिं नक्षत्रेभ्यः किर्मिरं रात्र्यै कृष्णं पिङ्गाक्षं परासुव ॥ २१ ॥

भावार्थः—अग्निर्हि स्थूलं दग्धुं शक्नोति न सूक्ष्मं पृथिव्यां पीठसर्पिणः सततं विचरन्ति नेतरे विहंगमाश्चाण्डालस्य शरीरागतो वायुर्दुर्गन्धत्वान्न सेवनीय इत्यादि ॥ २१ ॥

**पदार्थः**—हे परमेश्वर वा राजन्! आप (अग्नये) अग्नि के लिये (पीवानम्) मोटे पदार्थ को (पृथिव्यै) पृथिवी के लिये (पीठसर्पिणम्) विना पगों के कढ़िरि के चलनेवाले सांप आदि को (अन्तरिक्षाय) आकाश और पृथिवी के बीच में खेलने को (वंशनर्त्तिनम्) वांस से नाचने वाले नट आदि को (सूर्याय) सूर्य के ताप प्रकाश मिलने के लिये (हर्यक्षम्) वांदर की सी छोटी आंखों वाले शीतप्राय देशी मनुष्यों को (चन्द्रमसे) चन्द्रमा के तुल्य आनन्द देने के लिये (किलासम्) थोड़े श्वेतवर्ण वाले को और (अन्हे) दिन के लिये (शुक्लम्) शद्ध (पिङ्गलम्) पीली आंखों वाले को उत्पन्न कीजिये (वायवे) वायु के स्पर्श के अर्थ (चाण्डालम्) भंगी को (दिवे) क्रीड़ा के अर्थ प्रवृत्त हुए (खलतिम्) गंजे को (नक्षत्रेभ्यः) राज्य विरोध के लिये प्रवृत्त हुओं के लिये (किर्मिरम्) कवरों को और (रात्र्यै) अन्धकार के लिये प्रवृत्त हुए (कृष्णम्) काले रंग वाले (पिङ्गाक्षम्) पीले नेत्रों से युक्त पुरुष को दूर कीजिये ॥ २१ ॥

**भावार्थः**—अग्नि स्थूल पदार्थों के जलाने को समर्थ होता है सूक्ष्म को नहीं। पृथिवीपर निरन्तर सर्पादि फिरते हैं किन्तु पक्षी आदि नहीं। भंगी के शरीर में आया वायु दुर्गन्ध युक्त होने से सेवने योग्य नहीं होता इत्यादि तात्पर्य्य जानना चाहिये ॥ २१ ॥

अथैतानित्यस्य नारायण ऋषिः। राजेश्वरौ देवते।

निचृत्कृतिश्छन्दः। निषादः स्वरः ॥

पुनस्तमेव विषयमाह ॥

फिर उसी वि० ॥

अथैतानष्टौ विरूपानालभतेऽतिदीर्घं चातिह्रस्वं चातिस्थूलं चातिकृशं चातिशुक्लं चातिकृष्णं चातिकुल्वं चातिलोमशञ्च अशूद्रा अब्राह्मणास्ते

प्राजापत्याः । मागधः पुंश्चली कितवः क्लीबो अशूद्राः अब्राह्मणास्ते प्राजापत्याः ॥ २२ ॥

अथ । एतान् । अष्टौ । विरूपानिति विऽरूपान् । आ । लभते । अतिदीर्घमित्यतिऽदीर्घम् । च । अतिह्रस्वमिति अतिऽह्रस्वम् । च । अतिस्थूलमित्यतिऽस्थूलम् । च । अतिकृशमित्यतिऽकृशम् । च । अतिशुक्लमित्यतिऽशुक्लम् । च । अतिकृष्णमित्यतिऽकृष्णम् । च । अतिकुल्वमित्यतिऽकुल्वम् । च । अतिलोमशमित्यतिऽलोमशम् । च । अशूद्राः । अब्राह्मणाः । ते । प्राजापत्याऽइति प्राजाऽपत्याः । मागधः । पुंश्चली । कितवः । क्लीबः । अशूद्राः । अब्राह्मणाः । ते । प्राजापत्याऽइति प्राजाऽपत्याः ॥ २२ ॥

पदार्थः–( अथ )आनन्तर्य्ये ( एतान् ) पूर्वोक्तान् (अष्टौ) (विरूपान्) विविधस्वरूपान् ( आ ) समन्तात् (लभते) प्राप्नोति ( अतिदीर्घम् )अतिशयेन दीर्घम् (च) (अतिह्रस्वम्) अतिशयेन ह्रस्वम् (च)(अतिस्थूलम्) ( च ) ( अतिकृशम् ) ( च )( अतिशुक्लम्)(च) (अतिकृष्णम्) (च) (अतिकुल्वम्) लोमरहितम् (च) (अतिलोमशम्) अतिशयेन लोमयुक्तम् (च )(अशूद्राः ) न शूद्रा अशूद्राः (अब्राह्मणाः)न ब्राह्मणाः अब्राह्मणाः (ते)(प्रजापतिदेवताकाः (मागधः ) नृशंसः (पुंश्चली) या पुंभिश्चलितचित्ता

व्यभिचारिणी (कितवः) द्यूतशीलः (क्लीबः) नपुंसकः (अशूद्राः) अविद्यमानः शूद्रो येषान्ते (अब्राह्मणाः) अविद्यमानो ब्राह्मणो येषान्ते (ते) (प्राजापत्याः) प्रजापतेरिमे ते ॥ २२ ॥

अन्वयः—हे राजानो! यथा विद्वानतिदीर्घं चातिह्रस्वं चातिस्थूलं चातिकृशं चातिशुक्लं चातिकृष्णं चातिकुल्वं चातिलोमशं चैतान्विरूपानष्टावालभते तथा यूयमप्यालभध्वम्। अथ येऽशूद्रा अब्राह्मणाः प्राजापत्याः सन्ति तेऽप्यालभेरन्। यो मागधो या पुंश्चली कितवः क्लीबोऽशूद्रा अब्राह्मणास्ते दूरे वासनीयाः। ये प्राजापत्यास्ते समीपे निवासनीयाः ॥ २२ ॥

भावार्थः— अत्र वाचकलु०। हे मनुष्या! यथा विद्वांसः सूक्ष्ममहत्पदार्थान् विज्ञाय यथायोग्यं व्यवहारं साध्नुवन्ति तथाऽन्येपि साध्नुवन्तु। सर्वैः प्रजापतेरीश्वरस्योपासना नित्यं कर्त्तव्या इति ॥ २२ ॥

अस्मिन्नध्याये परमेश्वरस्वरूपराजकृत्ययोर्वर्णनादेतदर्थस्य पूर्वाध्यायेन सह सङ्गतिरस्तीति वेद्यम् ॥

पदार्थः—हे राजा लोगो! जैसे विद्वान (अतिदीर्घम्) बहुत बड़े (च) और (अतिह्रस्वम्) बहुत छोटे (च) और (अतिस्थूलम्) बहुत मोटे (च) और (अतिकृशम्) बहुत पतले (च) और (अतिशुक्लम्) अतिश्वेत (च) और (अतिकृष्णम्) बहुत काले (च) और (अतिकुल्वम्) लोम रहित (च) और (अतिलोमशम्) बहुत लोमों वाले को (च) भी (एतान्) इन (विरूपान्) अनेक प्रकार के रूपों वाले (अष्टौ) आठों को (आ, लभते) अच्छे प्रकार प्राप्त होता है वैसे तुम लोग भी प्राप्त होओ (अथ) इस के अनन्तर जो (अशूद्राः) शूद्रभिन्न (अब्राह्मणाः) तथा ब्राह्मण भिन्न (प्राजापत्याः)

प्रजापति देवता वाले हैं ( ते ) वे भी प्राप्त हों जो ( मागधः ) मनुष्यों में निन्दित जो ( पुंश्चली ) व्यभिचारिणी ( कितवः ) जुआरी (क्लीवः) नपुंसक (अशूद्राः) जिन में शूद्र और (अब्राह्मणाः) ब्राह्मण नहीं उन को दूर बसाना चाहिये और जो ( प्राजापत्याः ) राजा वा ईश्वर के सम्बन्धी हैं ( ते ) वे समीप में बसने चाहियें ॥ २२ ॥

**भावार्थः**—इस मंत्र में वाचकलु०। हे मनुष्यो! जैसे विद्वान् छोटे बड़े पदार्थों को जान के यथायोग्य व्यवहार को सिद्ध करते हैं वैसे और लोग भी करें सब लोगों को चाहिये कि प्रजा के रक्षक ईश्वर और राजा की आज्ञा सेवन तथा उपासना नित्य किया करें ॥ २२ ॥

इस अध्याय में परमेश्वर के स्वरूप और राजा के कृत्य का वर्णन होने से इस अध्याय के अर्थ की पूर्व अध्याय के अर्थ के साथ संगति जाननी चाहिये ॥

यह तीसवां अध्याय समाप्त हुआ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्याणां श्रीयुतविरजानन्दसरस्वती
स्वामिनां शिष्येण श्रीमत् परमहंसपरिव्राजकाचार्येण
दयानन्दसरस्वतीस्वामिना निर्मिते संस्कृतार्य्य-
भाषाभ्यां विभूषिते सुप्रमाणयुक्ते यजुर्वेद-
भाष्ये त्रिंशोऽध्यायः पूर्त्तिमगमत् ॥

